ताभिर्विशोधितान् ध्यायान्निःशेषा लोकधातवः ।
शोध्यं बोध्यं तया सर्वरश्मिभिर्बुद्धकोटयः ॥ 28 ॥

विशतस्तानुत्पले ध्यायात्ततस्तारोदयो भवेत् ।
रक्तवर्णायुधा देवी सर्वालङ्कारभूषिता ॥ 29 ॥

समयमूर्त्तिं समासाद्य ज्ञानचक्रं समाकृषेत् ।
झटित्याकारनिष्पन्नं ज्ञानचक्रं पुरःस्थितम् ॥ 30 ॥

समयमुद्राप्रयोगेण मुखमार्गे प्रवेशयेत् ।
पाणिभ्यामञ्जलिं कृत्वा मांसलौ नामितौ यदा ॥ 31 ॥

द्वाभ्यां तु कृता सूची सूचीमध्ये त्वनामिकौ ।
[1]ललाभ्यां मध्यमौ श्लिष्टौ द्वावङ्गुष्ठावधो कृतौ ॥ 32 ॥

अनेन बन्धयेत् [2]मुद्रामनया चक्रं प्रवेशयेत् ।
अभिषेकं प्रार्थयेद्बुद्धानितिगाथां पठन् कृती ॥ 33 ॥

बोधिवज्रेण बुद्धानां यथा दत्तो महामहः ।
ममापि त्राणनार्थाय खवज्राद्य ददाहि मे ॥ 34 ॥

ददन्ति महाभूता राज्यमभिषेकनामतः ।
पुष्पाभिषेक[3]वद्राज्ञः पञ्चभिर्ल्लोचनादिभिः ॥ 35 ॥

अभिषेकं महावज्रं त्रैधातुकं नमस्कृतम् ।
ददामि सर्वबुद्धानां त्रिगुह्यालयसंभवम् ॥ 36 ॥

---

1 མཛུབ་མོ་གཉིས་-भो०

2 समयामनया-अन्यत्र, समयमुद्रा-भो०।

3 मातृकासु-वज्राद्यः, गृहीतस्तु भोटानुसारी।

बुद्धाभिषेकतस्तारा धर्मचूडामणिर्भवेत् ।
रक्तचित्रप्रभा भाति भासयन्ती जगत्त्रयम् ।। 37 ।।

प्राप्ताभिषेकरत्नं तु सर्वसिद्धिं प्रसाधयेत् ।
वर्षार्द्धदृढावेशात् यथोक्तविधिना पुरा ।। 38 ।।

त्रिसन्ध्यासु बलिं दत्त्वा मन्त्रेणानेन [1]शर्क्करैः ।
पिष्टकाद्यैर्विधानेन स्वप्नाभिज्ञानमाप्नुयात् ।। 39 ।।

खड्गपातालसिद्धिश्च अन्तर्द्धानरसायनम् ।
अदृश्यं खेचरत्वं च पादलेपाञ्जनं तथा ।। 40 ।।

[2]स्वप्नेन प्रत्यभिज्ञानं सिद्धिरुत्पद्यते स्वयम् ।
क्षुद्रसिद्धिं न साधयेत् यदि तारोद्भवे रतः ।। 41 ।।

चक्रवर्तिपदं राज्यं [3]महेन्द्रत्वं सार्वभोक्तृताम् ।
स्वप्नेनैव प्रसाधयेज्जापभावनयान्वितः ।। 42 ।।

[4]षण्मासान्तै( ने )कमासस्य सर्वां रात्रिं जपेद्व्रती ।
बद्ध्वा चैवोत्पलां मुद्रां जपन् मुद्रा ज्वलेत्क्षणात् ।। 43 ।।

तेन मुद्राप्रभावेण समाकृष्टाः [5]सयोषितः ।
ब्रह्मेन्द्रोपेन्द्ररुद्राद्या आगच्छन्ति वशीकृताः ।। 44 ।।

ततः प्रभृति सर्वात्मा सिद्धः संसारवासनात् ।
यथा पद्म समालिप्तं [6]पङ्कदोषेण वारिणा ।। 45 ।।

---

1 सशर्करैः-ङ च. ।
2 स्वप्नेन...भावनयान्वितः-नास्ति भो० ।
3 महीन्द्रत्वं-मातृकासु, गृ० तु भोटानुसारी ।
4 इतः पूर्वं स्वप्नेनैव प्रसाधयेत्-भो० ।
5 सर्वयो०-ङ च. ।
6 जन्म-सर्वमातृकासु, गृहीतस्तु भोटानुसारी ।

स्पृष्टे सूते यथा नैकः संहृतेनैकतां व्रजेत् ।
तथा सिद्धस्य चित्तानि सर्वज्ञत्वं गतानि तु ॥ 46 ॥

सिद्धे सूते च संसृष्टो [1]यथा स्वर्णो भवेन्निधिः ।
सिद्धमन्त्रेण संसृष्टो बुद्धकाया हि मन्त्रिणः ॥ 47 ॥

त्रिदशेश्वरतां यान्ति त्रैधातुकमहेश्वराः ।
बुद्धवंशे समुत्पन्नाः पुनश्चक्रप्रवर्तकाः ॥ 48 ॥

जातिं कुर्वन्ति प्रव्रज्यां बोधिमण्डोपसंक्रमम् ।
चरन्ति दुष्करां चर्यां बुद्धतां च स्मरन्ति ते ॥ 49 ॥

देवावतारनिर्माणं धर्मचक्रप्रवर्तनम् ।
परिनिर्वाणलाभं च श्मशानगमनं तथा ॥ 50 ॥

त्रैलोक्यधातुकं दत्त्वा संभोगैर्विग्रहैर्जिनाः ।
शुद्धावासं पुनर्यान्ति हित्वा निर्माणजां तनुम् ॥ 51 ॥

प्रवर्त्य धर्मकायं तु पुस्तकादिपटक्रमैः ।
स एव सिद्ध्यते मन्त्रस्तेन बुद्धेन भाषितः ॥ 52 ॥

कुरुकुल्ला अभिसमयकल्पो द्वितीयः[2] ॥ 2 ॥

•

---

1 यथा---संसृष्टो-नास्ति-घ.च.।
2 भोटपाठे पुष्पिका न वर्तते।

## तृतीयः कल्पः

अथ ते सर्व[1] तथागतबोधिसत्त्वात्मनैवात्मचित्तपरिवितर्कानापद्य वज्रपाणिं [2]महाबोधिसत्त्वमेवमाहुः—कथं वज्रपाणिं(णे) बुद्धा भगवन्तो वज्रकाया धर्मधातुकायाः कस्मिन् पृथिवीप्रदेशे कालक्रियां कुर्वन्ति। अथ खलु वज्रपाणिस्तान् सर्व[3]बुद्धबोधिसत्त्वानेवमाह—यद्बोधिसत्त्वाः बुद्धा भगवन्तो वज्रकाया [4]धर्मकाया अभेद्यकाया धर्मधातुकाया कस्मिंश्चित् [दपि] पृथिवीप्रदेशे कालक्रियां कुर्वन्तीति।

तत आह [5]वज्रपाणिः। तत्रैव शृण्वन्तु बोधिसत्त्वा यद्भगवान् परिनिर्वृतः सुखावत्यां गतः।। 1।।

अथ बोधिसत्त्वाः प्रोचुः—किं वज्रपाणे! भगवन्तः [6]धर्मकायं प्रहाय सुखावतीं यान्ति? आह—कुलपुत्राः निर्माणकायं प्रहाय सम्भोगकायेन सुखावत्यां यान्तीति। आह—तत्कथं वज्रपाणे [7]धर्मकायं त्यक्त्वा यान्तीति? वज्रपाणिराह—यथा कश्चिन्मायावी पुरुषः प्रयोजनार्थं मायामवतार्य प्रयोजनं साधयेत्, तथा बुद्धा भगवन्तः पुरासिद्धाः सत्त्वानुग्रहहेतुना चक्रवर्त्तिनि निर्वृत्ते पुनर्जन्मपरिग्रहं चक्रुः, यदा बुद्धा निर्वृत्ताः भवन्ति तदा चक्रवर्त्तिनो भवन्ति, उभाभ्यां विगतो लोको न कदाचिदुत्पद्यते।। 2।।

**विनयलोक[8]मासाद्य विजित्वा द्विपदोत्तमः।**
**संस्थित्वाऽशीतिवर्षाणि ययुर्बुद्धा जिनालयम् ।। 3।।**

---

1 तथागत-नास्ति मातृकासु, गृहीतस्तु भोटानुसारी।
2 महा-नास्ति, क.ख.घ.ङ.।
3 बुद्ध-नास्ति मातृकासु, गृहीतस्तु भोटानुसारी।
4 धर्मकाया-नास्ति भो०।
5 वज्रपाणिः-नास्ति भो०।
6 कायं-मातृकासु सर्वत्र, गृहीतस्तु भोटानुसारी।
7 धर्मकायं-मातृकासु नास्ति, गृहीतस्तु भोटानुसारी।
8 माश्रित्य-भो०।

बुद्धमायां परित्यज्य सुखावत्यां जिनालये ।
महाप्रशमसुखासक्तास्तिष्ठन्त्यानन्दरूपतः ।। 4 ।।

कर्ता नित्यैकसक्तासु मन्यन्ते ऋषयो मनः ।
एवं रूपं न तत्त्वेन क्षणिकं शून्यमिष्यते ।। 5 ।।

आत्मग्रहविपन्नानां नित्यं नित्यार्थकांक्षिणाम् ।
अनित्यतावताराय त्यक्त्वा कायं ययुर्जिनाः ।। 6 ।।

तेषां सर्वज्ञचित्तानां सर्वभावस्वभाविनाम् ।
इतःस्थानमितः स्थानं निश्चित्तं नैव विद्यते ।। 7 ।।

सांवृतं सत्यमाश्रित्य बुद्धानां धर्मदेशनाम् ।
प्रवर्त्तन्ते नभस्तुल्या विनेयाः [1]सुसहादिषु ।। 8 ।।

बुद्धोत्पादो न तत्त्वेन बुद्धनाशोऽपि नैव च ।
सर्वमेकरसीभूते नोदयो न व्ययस्तथा ।। 9 ।।

धर्मधात्वैकरूपास्ते पञ्चावृत्तिविवर्जिताः ।
गम्भीरोदाररूपेण संतस्थुस्तत्त्वरूपतः ।। 10 ।।

आदौ सत्त्वं गता नैव उभयोरन्यसम्भवात् ।
आदावेवास्वभावास्ते न निरुद्धा न भाविना( ता )।। 11 ।।

[2]बोधिसत्त्वाः प्रोचुः—

कथं मन्त्राः कथं तन्त्रः कथं मण्डलभावना ।
तत्कथं सिद्धयः सिद्धाः [3]सत्त्वानुत्पत्तिकारणात् ।। 12 ।।

---

1 त्रिसहस्रादिषु-भो०।
2 अत्र भोटे अधिकः पाठो वर्तते।
3 सर्वा०-भो०।

वज्रपाणिराह—

प्रतीत्यसमुत्पन्नानि वस्तूनि सम्भवन्ति हि ।
प्रतीत्य मन्त्रमुद्राद्यं सिद्धयः सम्भवन्ति तत् ।। 13 ।।

सिद्धयश्चापि संवृत्या बौद्धाः पारमिताश्रयाः ।
बुद्धत्वं वज्रसत्त्वं च संवृत्यैव प्रसाधयेत् ।। 14 ।।

कुरुकुल्लाया बोधिचित्तकल्पस्तृतीयः[1] ।। 3 ।।

•

1 भोटानुसारेण अत्र द्वितीयकल्पः समाप्तः।

## चतुर्थः कल्पः

**[1]अथातः संप्रवक्ष्यामि मन्त्रजापविधिक्रमम् ।**
**येन विज्ञातमात्रेण साधकः सिद्धिमाप्नुयात् ।। 1 ।।**

**विद्रुमेण तु वश्यं कुर्यात् [2]पुरुका विषनाशने ।**
**स्फटिकेन वर्द्धते प्रज्ञा त्रिषु कर्मसु योजयेत् ।। 2 ।।**

योनिविशुद्ध्या अश्वत्थपत्राकारकुण्डे अशोककाष्ठैरग्निं प्रज्वाल्य विधिना रक्तोत्पला[3]नामष्टशतं जुहुयात्, नटनागफणिवैश्याग्निना मूलमन्त्रेण त्रिमधु-(शर्कराघृतमधूनि)रक्तानाम् ।। 3 ।।

पश्चाद् यन्त्रं भवति। रजस्वलाकर्पटे त्रिकोणमण्डलं विलिख्य मध्ये साध्यायाः साधकस्य च नामग्रहणेन चोदकपदश[त]मन्त्रितेन अमुकी मे वशीभवत्विति कृत्वा पश्चाद् मूलमन्त्रं विदर्भ्य लाक्षारसेनावसव्यानामिकारक्तेन कुंकुमेन कर्पूरेण कस्तूरिकाभिर्वर्णकैर्लिखेत्[4] ।। 4 ।।

प्रज्ञावर्द्धने तत्रैव कुण्डे अर्क्ककरवीरकाष्ठेनाग्निं प्रज्वाल्य विग्रह-होमाग्निना आटरूषकाणां वचाया अयुतं जुहुयात् ।। 5 ।।

विषनाशने तत्रैव कुण्डे चन्दनकाष्ठेनाग्निं प्रज्वाल्य पिण्डतगराणामयुतं जुहुयात्। सर्वविषाकर्षी भवति। नानारोगप्रपीडितानां पीडामपनयति। शान्तिं कुरुते गारुडविधितन्त्रः ।। 6 ।।

**त्रैधातुकपथे रम्ये यावत्यो योषितः स्मृताः ।**
**[5]होमयन्त्रप्रयोगेण सर्वास्तदुपभुञ्जयेत् ।। 7 ।।**

---

1 इतः पूर्वं ''प्रज्ञावर्द्धनविधिः'' इति भोटानुसारी शीर्षकः ।
2 पुष्कर-भो० ।
3 अष्ट-नास्ति ग.च. ।
4 लिखेत्-नास्ति अन्यत्र, गृहीतस्तु भोटानुसारी ।
5 होममन्त्र-संस्कृतमातृकासु, गृहीतस्तु भोटानुसारी ।

रागावलोकना मैत्री तेन चित्तेन वश्यकृत् ।
कृत्वा वश्यं जगत्सर्वं बुद्धबोधौ नियोजयेत् ।। 8 ।।

इति वश्यविधिः ।।

सर्वाकारज्ञता नाम विना प्रज्ञा न लभ्यते ।
तीक्ष्णां समाधयेत् प्रज्ञां [1]होमजापप्रयोगतः ।। 9 ।।

सर्वधर्मप्रविचया धीः शुद्धा [ च ] स्फुरत्त्विषा ।
प्रज्ञापारमितास( सा ) हि तया योगी विमुच्यते ।। 10 ।।

[ इति ] प्रज्ञावर्द्धनविधिः ।।

गृहाभिधानपत्राणि शटी यष्टीमधुस्तथा ।
ब्राह्मणी मागधी चैव सक्षौद्रां भक्षयेत् कृती ।। 11 ।।

[ इति ] प्रज्ञावर्द्धनी[ य ]तन्त्रः[2] ।।

[3]चण्डाली जालिकाश्चैव स्नेहमल्ली स्वशुक्रकम् ।
मृताः स्वोदरकीटाश्च वशीकुर्वन्ति भक्षणे ।। 12 ।।

[ इति वश्य ] तन्त्रः[4] ।।

सघृतं तगरमूलं च सुचक्राद्वा तथैव च ।
दंष्ट्राघाते प्रलेपेन पानेन च हरेद्विषम् ।। 13 ।।

[ इति ] विषनाशनतन्त्रः[5] ।।

---

1 तस्मात् तद्प्राप्तिकामः यत्–भो० इत्यधिकः।
2 औषधिः–भो०।
3 पूर्वं विषनाशनं अनन्तरं वश्यतन्त्रः–भो० क्रमः।
4 औषधिः–भो०।
5 औषधिः–भो०।

विषाकर्षाज्जगच्छान्तिः प्रज्ञावृद्ध्या च बुद्धिभिः ( धीः )[1] ।
धर्मचक्रप्रवृत्तिश्च वश्यकृत् कुरुते क्षणात् ।। 14 ।।

नान्योपायो महायाने स्वपरार्थप्रसिद्धये ।
सकृदभ्यासिता विद्या सद्यः प्रत्ययकारिणी ।। 15 ।।

ह्रीःकारं मदनातपत्रनिहितं स्त्रीणां भवेच्छ्रा( द्र्रा )वकं
जिह्वायां च तदेव बुद्धिजननं हृन्मध्यके चैव तत् ।
दंष्ट्राणां परिभावितं विषहरं धर्माक्षरं सुन्दरं
ताराया हृदयं त्रिलोकविजयि ज्ञेयं कृपाशालिभिः ।। 16 ।।

वाचादोषपरिक्षयाद्विषहरी चित्तस्य दोषापहात्
प्रज्ञावृद्धिरुदाहृता तनुभवां दोषक्षयाद्वश्यकृत् ।
तस्मात्सर्वमिदं जगद् विकुशलैर्ग्रस्तं न सिद्धिं व्रजेत् ।
तेनात्रैव जिनौरस( सा ) विकुशलै[2]र्दोषं कुरुध्वं हिताः ।। 17 ।।

मुद्राबन्धविशेषतस्तनुभवा दोषाः क्षयं यान्ति वै
मन्त्रक्षालितजिह्वया वदनजा दोषाश्च चित्तोद्भवाः ।
ध्यानाध्यासितचेतसामत इतः श्रद्धां कुरुष्वानघाः
काये वाचि मनस्यनाकुलतले तिष्ठन्ति बुद्धायेत् ( यतः ) ।। 18 ।।

निष्पापप्रसवेक्षणः करुणया त्रैलोक्यराजो भवेत्
दानात् पुण्यबलाधिको धनपतिर्मर्त्याधिपो वीर्यवान् ।
कौशीद्यापनयात् कृती निरयजं दुःखं न भुंक्ते क्षणात्
कारुण्यं धनदानवीर्यनिधनं बुद्धात्मजाः सेवथ ।। 19 ।।

---

1 बुद्धत्वमेव-भो० ।
2 निर्दोषं-क.ग.घ.च ।

[1]नित्यं ध्यानवशेन शुद्धहृदयो बुद्धान्न तत्त्यक्ष्यते
स्वप्नेनापि तथागतैः परिगतं चात्मानमीक्षन्सदा ।
नानाबुद्धविमानमेरुगमनं कालक्रियायां बुधाः
पश्यन्ति करुणात्मकान्नरकिनः पश्यन्ति पापां पुरीम्।। 20।।

अथविशुद्धितन्त्रः ।।

[2]कामो यत्र विषं तत्र बुद्धिस्तत्रैव तिष्ठति ।
अत एव कथं नाम [3]वागीशा पाण्डरा मता ।। 21।।

विषापहारिणी सैव हयग्रीवपदे स्थिता ।
रागवज्रपदोद्भूता वश्यं कुर्याज्जगत्त्रयम् ।। 22।।

रागकुलतन्त्रसिद्धिः ।।

अथापरोऽपि प्रयोगो भवति।

त्रिकोणं मण्डलं कृत्वा परं चापि त्रिकोणकम् ।
ऐन्द्रीं दिशं समारभ्य ॐकारादीन् लिखेत् कृती[4] ।। 23।।

षड्बीजं षट्सु कोणेषु धर्मबीजन्तु मध्यतः ।
फूःकारान्तर्गतं कृत्वा द्वारदेहलिके लिखेत् ।। 24।।

[ इति ] सर्प्पविदारणमन्त्रः ।।

---

1 पदस्य अस्य भिन्नपाठो वर्तते-भो०। ནམ་མཁའི་དཀྱིལ་དུ་སངས་རྒྱས་རྣམས་བཞུགས་བསམ་གཏན་སྟོབས་ཀྱིས་ སངས་རྒྱས་རྣམས་ལ་སེམས།

2 'कामो यत्र विषं' - नास्ति भो०।

3 योषिता-भो०।

4 बुधः-भो०।

अथापरोपि प्रयोगः स्त्रीणां सौभाग्यकरणाय। उत्पलं सप्तपत्रं कृत्वा सप्ताक्षराणि तत्र प्रयोक्तव्यानि तस्य पुष्करे ह्रीःकारद्वयविदर्भितं [1]साधकस्य साध्याया वा नाम वश्यविधिना लिखेत्। भूर्जे अथवा रजःस्वलाकर्पटे बाहौ विद्या[2]गतं कृत्वा परिधापयेत् ।। 25।।

**पतिर्दासो भवेत् स्त्रीणां राजानः सेवकस्य च ।**
**शुचिना सुपवित्रेण इदं मन्त्रं समुद्धरेत् ।। 26।।**

**[ इति ] वश्यविधिः ।।**

**[3]अथ रक्षाचक्रं भवति।**

**चतुःपत्रोत्पलं कृत्वा मध्ये चन्द्रं ततो लिखेत् ।**
**पूर्वे चालिखेद्बाणं दक्षिणे चापमेव च ।। 27।।**

**पश्चिमे अभयपाणिं तु उत्पलमुत्तरे लिखेत् ।**
**अन्तरं मध्यचन्द्रे तु सप्तबीजेन वेष्टितम् ।। 28।।**

**बहिर्वेष्टितचक्रं तु उत्पलमालाविभूषितम् ।**
**भूर्जपत्रे विलिख्येदं स्वदोर्दण्डे विधारयेत् ।। 29।।**

**[ इति ] बालवृद्धतरुणानां [4]रक्षातन्त्रसिद्धिः।**

अथ ईश्वर[5]प्राप्तुकामेन बीजपूरकं [6]विलिख्य तस्य मध्ये धनुर्लिखेत्। धनुषि रत्नाकारमुत्पलं लिखेत्, उत्पलकलिकामध्ये ज्रुँकारं सप्ताक्षरेण वेष्टितम्।

---

1 साध्यनाम-भो०।
2 गुडिकां कृत्वा-भो०।
3 रक्षार्थं यन्त्रं भवति-भो०।
4 रक्षायन्त्रस्वसिद्धिः-भो०।
5 कर्तु-संस्कृतमात्रिकासु, गृहीतस्तु भोटानुसारी।
6 विलिखेत्-ग.ङ. च.।

जातरूपपत्रे विलिखेदिदं गृहमूर्ध्नि धारयेत्। बहिरुत्पलमालावेष्टितं कृत्वा द्वादशाष्टम्यां पञ्चरत्नभूतकुम्भेनावतार्य स्नाप्य संपूज्य मन्त्र[1]शतं जपेत्। एकवर्षेण धनदसमो भवति। विद्यां[2] च तादृशीं परिधापयेत् ।। 30 ।।

अथापरोऽपि प्रयोगो भवति।

मध्याह्नवेलायां मङ्गलवारेण चित्तकपर्दकं प्राप्य करतले स्थाप्य कोटिं जपेत्। द्यूते जयो भवति। तं कपर्दकं कुरुकुल्लामन्त्रेणाष्टशतं जपेनारभ्य पूजां कृत्वा द्वादशाष्टमीषु स्नापयित्वा [3]अन्यकर्पटेन प्रावृत्य बाहौ धारयेत्। अनेन महाधनेश्वरो भवति। अथ तं कपर्दकं भाण्डे प्रक्षिप्य धरण्यां गोपयेत्। प्रतिदिनं कार्षापणं लभ्यते ।। 31 ।।

**[ इति ] अर्थसिद्धि-राज्यसिद्धि-द्यूतलाभफलसिद्धितन्त्राः।**

## कुरुकुल्लाया[4]श्चतुर्थः कल्पः ।। 4 ।।

•

---

1 अष्टोत्तरशतं-भो०।
2 विद्यागुलिकां च-भो०।
3 पूजा-भो०।
4 तृतीयः कल्पः-भो०।

## पञ्चमः कल्पः

अथातः संप्रवक्ष्यामि मण्डलस्य यथाक्रमम् ।
[1]रजसा दर्शनाद्यस्य बुद्धत्वं शीघ्रमाप्नुयात् ॥ 1 ॥

चतुरस्त्रं चतुर्द्वारं चतुस्तोरणभूषितम् ।
तत्र मध्ये लिखेद् देवीं भगाकारां सुरञ्जिताम् ॥ 2 ॥

पूर्वेण [ तु ] लिखेद्बाणं दक्षिणे चापमेव च ।
पश्चिमे अभयपाणिं च उत्तरे उत्पलं तथा ॥ 3 ॥

कोणभागेषु सर्वेषु वज्रचक्रादयश्चतुः ।
रक्तवस्त्रोत्तरीयं च [2]रक्ताभरणमेव च ॥ 4 ॥

रक्तवस्त्रेण मुखं बद्ध्वा शिष्यं तत्र प्रवेशयेत् ॥ 5 ॥

अनेन सत्त्ववज्री मुद्रां बद्ध्वा चक्रे पुष्पप्रक्षेपणं कारयेत्। प्रतीच्छ वज्र होः मुक्त्वा मण्डलं दर्शयेत्। मध्ये पतति [3]वरं भवति। बाणे पतति वश्यकर्मणि योग्यो भवति। अभये पतति विषाकर्षणं शिक्षयेत्। उत्पले पतति प्रज्ञावृद्धिं शिक्षयेत्। धनुषि पतति सर्वज्ञज्ञानं शिक्षयेत्।

प्रवेशे एवं वदेत्। न त्वयेदं सर्वतथागतपरमरहस्यं कस्यचिदिदं मण्डलम[4]प्रविष्टस्य पुरतो वक्तव्यम्। मा ते समयो व्ययेति [5]विषमापरिहारेण कालक्रियां कृत्वा नरके पतनं स्यात्॥ 6॥

ततः पश्चात् समयं दद्यात्। [6]रत्नत्रयादिविस्तरतन्त्रसिद्धिशपथं दत्त्वा॥ 7॥

---

1 रजसां-ग.च.।
2 रक्ताभरणमेव च-नास्ति ग.च.भो०।
3 वरं भवति, बाणे पतति। नास्ति अन्यत्र, गृहीतस्तु भोटानुसारी।
4 प्रविष्टस्य-अन्यत्र, गृहीतस्तु भोटानुसारी।
5 विषया-ग.च., विषमापरिहारेण-नास्ति भो०।
6 रत्नत्रयमपरित्यज्य इत्यादि विस्तरतन्त्रे सिद्धः-भो०।

बुद्धानां बोधिसत्त्वानां मन्त्रचर्याग्रचारिणाम् ।
हृदयेभ्यो महारक्तं तदा दुग्ध्वा भवान् पिबेत् ।। 8 ।।

धर्मराजमहासमयं यदि लंघसि मेऽन्तिकात् ।
अहं त्वया नावमन्तव्यो धर्मशासनपालकः ।। 9 ।।

रक्ताम्बरं सदा धार्यं रक्तमालानिबन्धनम् ।
रक्तगन्धानुलेपं च रक्तरत्नविभूषणम् ।। 10 ।।

ध्यातव्यं रक्तचित्तेन मन्त्रिणा रक्तचेतसा ।
सिन्दूरगैरिकैर्वापि रजोभिर्वर्त्तयेत्पुरम् ।। 11 ।।

हिंगुलं गैरिकं वापि कुंकुमं रक्तचन्दनम् ।
विद्रुमस्य द्रुतं चापि स कर्केतनपांशुना ।। 12 ।।

[1]होमे वा अथवा चक्रे प्रतिष्ठितं तथैव च ।
रक्तरूपयुतं सर्वं बुद्धकषायसूचकम् ।। 13 ।।

प्राणिनो न त्वया घात्या वक्तव्यं न मृषावचः ।
अदत्तं न त्वया ग्राह्यं न सेव्या परयोषितः ।। 14 ।।

कायिकं त्रिविधं कर्म वाचिकं च चतुर्विधम् ।
त्रिधा मानसिकं प्राहुरकुशलं जहीहि भोः ।। 15 ।।

धर्मामिषं तथा मैत्री अभयञ्च चतुर्विधम् ।
दानं सदा त्वया देयमभावाद्ध्यानकर्मणा ।। 16 ।।

चतुःसंग्रहवस्तूनि [2]शिक्षितव्यानि नित्यशः ।
दशपारमिता [3]भूमिबलानि वशितानि च ।। 17 ।।

---

1 होमे वा अथ वा कार्ये बुद्धकायाय सूचकम् ।। संस्कृतमातृकासु पाठः, गृहीतस्तु भोटानुसारी ।
2 सेवितव्यानि-भो० ।
3 काय-भो० ।

स्त्रीजनो नावमन्तव्यस्तारा नाम्नी विशेषतः ।
उद्ग्रा( द्वा )ह्या नैव सा नारी गृहस्थेनापि मन्त्रिणा ।। 18 ।।

नगरे निगमे ग्रामे जनपदे यत्र तारिणी ।
प्रतोल्यां चत्वरे वीथ्यां शृङ्गाटके च विशेषतः ।। 19 ।।

तत् स्थानं [1]बन्धयेन् नित्यं वर्णयेच्च सदार्पयेत् ।
तत्र स्थानस्थितो भूत्वा कुर्यान्मन्त्रादिसाधनम् ।। 20 ।।

तारानामापि या नारी रक्तगौरा सुलोचना ।
तां दृष्ट्वा सादरं योगी वन्दनं मनसा सृजेत् ।। 21 ।।

बन्धूकं दाडिमं पुष्पं करवीरं च जवां तथा ।
अन्यानि च रक्तपुष्पाणि लङ्घयेन्नैव साधकः ।। 22 ।।

एवं च संवरं दत्त्वा शुद्धं दिव्येन वारिणा ।
शिष्यं मन्त्रजलैः पूतं चतुःकुम्भस्य वारिणा ।। 23 ।।

आचार्यः स्नापयेत् क्रमशो बाणचापादिमुद्रया ।
प्रथमं बाणकुम्भेन द्वितीयं कार्मुकेन च ।। 24 ।।

तृतीयमभयकुम्भेन उत्पलेन चतुर्थकम् ।
शाक्यसिंहो यथा बुद्धैः पुत्रैर्वज्रधरादिभिः ।। 25 ।।

सिक्तो राज्याभिषेकेण तथा सिक्तो मया भवान् ।
अद्यैव सर्वबुद्धत्वं त्वया प्राप्तं हि मण्डले ।। 26 ।।

रजसा दर्शनाद् बुद्धाः सुप्रसन्ना भवन्ति हि ।
नात्र वो मरणं रोगात् शोकान्न च दरिद्रता ।। 27 ।।

---

1 वन्दयेत्-भो० ।

त्वया प्राप्ता तु संबोधिर्यानादस्मान्महासुखात् ।
[1]चतुर्णामभिषेकेण कृत्वा सद्धर्मभाजनम् ।। 28 ।।

गुह्यदानानि शिष्याय दातव्यानि विधिक्रमैः ।
[2]भाषितं मण्डलं दिव्यं सर्वबुद्धैरधिष्ठितम् ।। 29 ।।

चतुरस्रं चतुर्द्वारं चतुस्तोरणभूषितम् ।
हारार्द्धहाररचितमष्टस्तम्भोपशोभितम् ।। 30 ।।

तस्य कोणे लिखेद्वज्रं रत्नचन्द्रांशुमालिनम् ।
मध्ये चापि लिखेच्चक्रमष्टवज्रांशुमालिनम् ।। 31 ।।

चन्द्रस्योपरि लिखेद्वज्रं वज्रमालाविभूषितम् ।
ज्वरन्तं ( लन्तं ) शरच्चन्द्रांशुपूर्णेन्दुमिव निर्मलम् ।। 32 ।।

अष्टौ च कलशाः स्थाप्याः पञ्चमहोषधिसंयुताः ।
पञ्चधान्यपञ्चरत्नपञ्चपल्लवशोभिताः ।। 33 ।।

पञ्चपूर्णामृता वस्त्रयुगपरिवेष्टिताः ।
सितचन्दनलिप्ताङ्गाः पुष्पमालाविभूषिताः ।। 34 ।।

नानाखाद्यनि( नै )वेद्यैश्च दीपमालासुशोभिताः ।। 35 ।।

ततो विजयकलशमष्टशताभिमन्त्रितं कृत्वा पञ्चमहोषधीभिश्च व्रीहिपञ्चरत्नैश्च पञ्चभिरङ्गैः सितकृष्णरक्तपीतहरितैरलंकृतं संस्थाप्य संभाव्य च।

वितानविततं चैव नानाध्वजैरलंकृतम् ।
पुष्पमालाप्रलम्बं च सुगन्धं धूपधूपितम् ।। 36 ।।

1 बाणादिचतुरभिषेकेण-भो० ।
2 भाषितं मण्डलं.....अभिमन्त्र्य विधिक्रमैः-नास्ति भो० ।

**शिष्यं तत्र प्रवेशयेद्वस्त्रयुगेन मुखवेष्टितम् ।**
**ततो दन्तकाष्ठकं दद्यादुष्णीषचक्रवर्तिनि ।। 37 ।।**

चन्दनलिप्ताङ्गानि स्रग्दाममालाविभूषितानि च। ॐ मारीच्यै स्वाहेति-मन्त्रेण सर्वोपकरणान्यभिमन्त्र्य विधिक्रमैः ।। 38 ।।

तत्र प्रथमं तावन्नागाक्षपणं [1]गुह्यं शिक्षयेत्—

नमो रत्नत्रयाय। नमः सर्वबुद्धबोधिसत्त्वेभ्यः। नमोऽष्ट[2]सर्प्पपुङ्गलाय। नमः समस्तेभ्यो बुद्धकोटिभ्यः। तद्यथा। ॐ ह्रीः ह्रीः ह्रीः सर्वानन्तनागानां अनन्त-कुलानां वासुकिकुलानां तक्षककुलानां शंखपालकुलानां कर्क्कोटककुलानां पद्मकुलानां महापद्मकुलानां कुलिककुलानां वाराहककुलानां पुण्डरीककुलानां धनककुलानां मेघकुलानां जलदकुलानां जलधरकुलानां जीमूतकुलानां संवर्त्तककुलानां वसन्तकुलानां ऐरावतकुलानां कुमुदकुलानां कह्लारकुलानां सौगन्धिककुलानां हन हन शरेण बन्ध बन्ध चापेन ताडय ताडय उत्पलेन भीतानभयं देहि देहि प्रलयकाल इव जलधरमवतारयन् वर्षन् नागान्वशी कुरु कुरु फूः कुलापय कुलापय फूः कुरुकुल्ले ह्रीः हूँ स्वाहा ॐ कुरुकुल्ले ह्रीः हूँ फट् स्वाहा। फडित्यनेन मन्त्रेणापतितगोमयेन मण्डलकं कृत्वा विधिना चन्दनेनाष्ट-दलपद्मं विलिख्य पूर्वादिदले अनन्ताद्यानष्टनागान् संस्थाप्य शर्क्करया गुग्गुलेन रोहिणीऋक्षे अष्टोत्तरशतं जप्त्वा नागानां धूपं दत्त्वा पश्चात् पूजयेत्। [3]वर्षयन्ति, यदि न वर्षयन्ति तदा मद्येन स्नापयित्वा खदिरानलेन तापयेत् ततो वर्षयन्ति। यदि न वर्षयन्ति तदा कुष्ठानि भवन्ति। क्रियाभोजिना विद्याधरेणैव तत् कर्तव्यम्। पश्चात्संहार्य महानद्यां प्रवाहयेत् ।। 39 ।।

**देवो वर्षतु कालेन शस्यसंपत्तिरस्तु च ।**
**लोको भवतु स्फीतश्च राजा भवतु धार्मिकः ।। 40 ।।**

**इति परिणामना ।।**

---

1 गुह्यं-नास्ति भो०।
2 सर्प्य-भो०।
3 वर्षयन्ति-नास्ति भो०।

अतिवृष्टिं स्तम्भयितुकामः व्याडवैद्यकत्वात् नागमाकृष्य चन्दनेन मुक्षयित्वा क्षीरं पाययेत्। अनेन मन्त्रेण सप्ताभिमन्त्रितं कृत्वा अपक्वलोहितकुम्भे निधाय महामुद्रेण मुद्रयित्वा जपेत् [1]जले कुम्भं भञ्जयेत्। तत्क्षणं वृष्टिं स्तम्भयति।। 41।।

**गणाय भोजनं पश्चात् श्रावकायाथ मन्त्रिणे ।**
**[2]ददेदाखानपानाद्यैरिति तुष्यन्ति पन्नगाः ।। 42।।**

**यदि चैव न कुर्वन्ति मन्त्रिणो वारिपातने( नम् ) ।**
**कुष्ठा भवन्ति नागानामपरितोषणकारिणः ।। 43।।**

तेन राजानैरपि सपुत्रान्तःपुरैः स्नानं कृत्वा प्रत्यंगिरापञ्चम्यां प्रत्यंगिरा-मूलानि रजतपात्रे क्षीरेण सर्पिषाथवा पातव्यानि तं रजतपात्रं प्रक्षाल्य भिक्षवे दद्यात् वर्षं यावत्। सर्प्पेभ्यो भीतो न भवति। तस्यैव सर्पस्याशुभकर्मणा यदि दंशति तदा म्रियते सप्ताभिमन्त्रेण सिद्धिः।। 44।।

अथ कुष्ठमपनेतुकामेनानेन मन्त्रेण [3]लोहितविषं निर्विषीकृत्य भक्ष-येत् कुष्ठमपनयति। मूलमन्त्रेण वारि जप्त्वा सर्पघातकं प्रक्षालयेत्। निर्विषं कुरुते।। 45।।

अथ नागदर्शनकामेन रक्तोत्पलपत्रं अक्षरलक्षं जप्तं कृत्वाधिष्ठानं नागह्रदे प्रक्षिपेत्। ततो नागाङ्गना उत्तिष्ठन्ति साधकादादेशं मार्गयन्ति किं कुर्याम आदिशतु भवानिति। यथेप्सितं मन्त्रिणा वक्तव्यम्।। 46।।

## कुरुकुल्लामण्डलपटलकल्पः [4]पञ्चमः ।। 5।।

•

---

1 जले-नास्ति भो०।
2 दारदारक-भो०।
3 लोहितविषं-नास्ति भो०।
4 चतुर्थः-भो०।

## षष्ठः कल्पः

अथ राहुलभद्रकुमारो यदा [1]पिण्डपात्राय राजगृहं प्रविष्टः, प्रविष्टश्च वेणुवनं गतवान्। तत्र पात्रप्रक्षालनाय दीर्घिकामवतीर्णः यशोधरासुतेन श्वेतभिक्षुभ्रान्त्याऽऽकृष्टः। तस्मिन् समये राहुलभद्रकुमारेणेयं विद्या पठिता। पठितमात्रेण यथा कश्चित्स्वगृहान्निष्क्रान्तस्तथा राहुलभद्रकुमारो भगवतोऽन्तिके गतः। उपसंक्रम्य भगवन्तमेतदवोचत्-[2]यत् त्वयायं मन्त्रः प्रसादीकृतस्तस्य मन्त्रस्यानुभावो मया दृष्ट इति। भगवानाह—कुत्र? नागानामन्तिकात्, तद् भगवानन्येषामपि प्राणिनां रक्षार्थमिदमेव मन्त्रं प्रवर्त्तयतु। अथ भगवान् तस्मिन् समये इदं मन्त्रमस्य कल्पं वज्रपाणिनं प्रेषयित्वा श्रावकाय बोधिसत्त्वाय भिक्षुभिक्षुण्युपासकोपासिकाभ्यः प्रसादीकृतवान्। तेन भोः कुलपुत्र! इदं मन्त्रमस्य कल्पं ये पठन्ति चन्दनेन मण्डलं कृत्वा। तस्य शरीरे न विषदूषणं न विषनाशनं न लूतभयं न पामाभयं न कुष्ठभयं [3]न रोगभयं न नागभयं न व्यालभयं न मृगभयं न शस्त्रभयं न शत्रुभयं न दारिद्रभयं नाकालमृत्युभयं भविष्यति ।। 1।।

अथ च भगवान् शासनरक्षार्थं महाकालाय स्वपिण्डपात्रपुष्टां हारितीं राक्षसीं दत्तवान्। सा च पौर्वीकेनाशुभकर्मणा दुर्भगाऽभूत्। असंप्रतिपन्नो महाकालो न तिष्ठति न रमते न शासनं रक्षति। सा च राक्षसी उद्विग्ना। तस्यैव महाकालस्य च वशीकर्त्तुमिदं कुरुकुल्लाकल्पं भाषितम्।

ततः प्रभृति महासौभाग्यमभूत्। तेन हि कुलपुत्राः सर्वसत्त्वानां वशीकरणाय इदमेव मन्त्रमस्य कल्पमभ्यसनीयमिति।। 2।।

अथ सुनन्दपुत्रोऽभिरूपः प्रासादिको दर्शनीयो लाक्षणिको जातः। किन्तु जडबुद्धिः। अथ सुनन्दो भगवन्तमेतदवोचत्—भगवन्! मम पुत्रोऽभिरूपः प्रासादिको दर्शनीयो लाक्षणिको जातः किन्तु ज़डबुद्धिः। तत् कथं भगवन् प्रज्ञा

---

1 पिण्डाय-भो०।

2 तात त्वया मे-भो०।

3 नास्ति संस्कृतमातृकासु, गृहीतस्तु भोटानुसारी।

वर्द्धते। यदि भगवन्नसौ वत्सः साक्षरो भवेत् तदा युष्मच्छासने [1]प्रतिपन्नो भविष्यति। एवं श्रुत्वा भगवानभिमुखीं स्मृतिमुपस्थाप्येदं कल्पमिदं मन्त्रमभाषत। तेन भाषितमात्रेणासौ सुनन्दस्य पुत्रो रोहिणीकुमारो नाम प्रज्ञावानभूत्। द्वादशवर्षेण सर्वशास्त्रविशारदः [2]सर्वकल्पकुशलाभिज्ञोऽभूत्। तेन हि [3]पुत्रा महाप्रज्ञावृद्धये इदमेवमन्त्रमस्य कल्पं वा शिक्षणीयमिति ।। 3 ।।

## कुरुकुल्लाया निदानकल्पः षष्ठः ।। 6 ।।

•

1 अनुरक्षको-भो०।
2 सर्वशिल्पस्थानेषु-भो०।
3 कुलपुत्राः-भो०।

## सप्तमः कल्पः

अथ भगवान् खेचर[1]रससिद्धिमुवाच—

गृहीत्वा सूत्र( त )कं सम्यक्[2]गिरिदोषादिवर्जिते ।
शिलागर्त्तगतं कृत्वा लोकनाथेन मर्दयेत् ।। 1 ।।

[3]पुनर्द्ध[4]र्मरसैः क्षाल्य यवतिक्तकया तथा ।
आखुपूर्णारसेनापि मर्दयेच्च दिनत्रयम् ।। 2 ।।

वन्ध्याकाकोलिका [5]क्षीरैः क्षीरैर्भास्करवज्रयोः ।
अविद्धश्रवणतोयेन स्तन्यमिश्रेण मर्दयेत् ।। 3 ।।

तं सूतं कांजिकेनापि सप्तधा क्षाल्य मर्दयेत् ।
लोहपात्रे समावेश्य वृद्धदारकवटे पचेत् ।। 4 ।।

कनकपुष्पां तु पिण्डेनाधरोपरि वेष्टिता ।
[ दक्षिणा ]वर्त्तयेत्सूतं मूलमन्त्रस्य लक्षतः ।। 5 ।।

[6]पाषाणं तेन मन्त्रेण गन्धसूर्येण भावितम् ।
वह्नावयोमये पात्रे चूर्णयोगेन जारयेत् ।। 6 ।।

किंचिज्जीर्णे तु पाषाणे खपत्रं सकलं ग्रसेत् ।
जातरूपं ततः पश्चादस्यैव माक्षिकं पुनः ।। 7 ।।

---

1 रस-नास्ति भो० ।
2 रस-भो० ।
3 पुनर्द्धर्म....मिश्रेण मर्दयेत्-नास्ति-ग. ।
4 धर्मकायैः-भो० ।
5 पत्रैः-भो० ।
6 जपित्वा-भो० ।

तारशुल्वं तत्समं जार्य्यं तीक्ष्णं पञ्चगुणं तथा ।
षड्गुणं जारयेत्सर्वं भवेदर्क्कसमप्रभः ।। 8 ।।

तस्य गुञ्जेन पुञ्जानि वेधयेत्तु विचक्षणः ।
माषया चपलं विद्ध्वा सिद्धं जानाति सूतकम् ।। 9 ।।

वज्रमार्यस्नुहीक्षीरैः मेषशृंगसमन्वितम् ।
सिद्धे सूते जारयेद्वज्रं छुछुन्दर्याङ्गसम्भवैः ।। 10 ।।

अनेन वन्धिते सूते मरकतादि च जारयेत् ।
चक्षुषा मौक्तिकं जार्य्यं कुरुकुल्लायोगवित्सदा ।। 11 ।।

कणमात्रं हरेन्नित्यं स्त्रीणां कामयते शतम् ।
सप्तरात्रप्रयोगेण खेचरत्वं भवेत्कृती ।। 12 ।।

[ इति ] रसखेचरतन्त्रसिद्धिः ।

कुरुविन्दं पिष्टिकं कृत्वा बकुलबीजस्य मूषिके ।
रक्तकञ्चुकिमूषायां [1]लोहिकायां तु धामयेत् ।। 13 ।।

ससूते चैवमित्यस्य मृत्युरेव न संशयः ।
पले रौप्ये तु तं मार्ग्य पले षष्टिपलैः पुनः ।। 14 ।।

[2]पर्वतानपि विन्धेत कुरुते तारपर्वतम् ।
तार[3]पातालसिद्धिः स्यात्तया सत्त्वार्थमाप्नुयात् ।। 15 ।।

सत्त्वार्थात्पुण्यसंभारं संभाराद्बोधिरुत्तमा ।। 16 ।।

इति तारसिद्धितन्त्रः ।

---

1 लोहितायां-भो० ।

2 ཟང་དང་མཉམ་པར་བསྒྲུབ་བྱས་ནས། དངུལ་གྱི་རིལ་བུ་བྱེད་པ་ཡིན།

3 रौप्य-भो० ।

[1]नीलक्रोण्ठो( ? ) यथोद्दिष्टो नीलचित्रक उच्यते ।
क्षीरेण तं पिबेद्योगी मासेनाब्दसाहस्त्रिकः ।। 17 ।।

कृष्णां कलम्बिकां मन्त्रैरालम्ब्य क्षीरभाजने ।
अष्टम्यां प्राशयेद्योगी जीवेच्चन्द्रार्क्कतारकम् ।। 18 ।।

हरिद्राभ्रामरीं लब्ध्वा क्षीरेणालोड्य तां पिबेत् ।
[2]वलीपलितविहीनः स्यात् पौषधेन पिबेद्यदि ।। 19 ।।

ब्रह्मपुरोहितानान्तु जीवितं स्यान्न संशयः ।
यत्र तत्र स्थितानां तु वटानां [3]कलकं तथा ।। 20 ।।

गृहीत्वा कर्क्कटीरूपान् क्षीरेणालोड्य तं पिबेत् ।
वलीपलितविहीनः स्यात् पोषधेन यदि क्रिया ।। 21 ।।

इति रसायनसिद्धितन्त्रः ।

कुरुकुल्लाया रसायनतन्त्रकल्पः सप्तमः ।। 7 ।।

•

1 नीलक्रुन्तो-भो० ।
2 वली....पिबेद्यदि-नास्ति भो० ।
3 फलं-भो० ।

## अष्टमः कल्पः

[1]अथ भगवानौषधिप्रयोगानुवाच—

[2]पुत्रेण कार्या( र्यो ) वटवृक्षपुष्पं क्षीरैः समालोड्य पिबेद् व्रतस्थः ।
तस्यापि नारी च सपोषधेन पिबेत् स पुत्रवरः सुभाग्यः ॥ 1 ॥

मन्त्रेण चानेन वचाफलानि दुग्धेन पिष्ट्वा तु पिबन्ति यास्तु ।
पुत्रं लभन्ते नृपलक्षणेन ता योषितः पोषधिका यदि स्युः ॥ 2 ॥

लक्ष( क्ष्म )णाक्षमूलं पयसा पिबेद् या स्नानावशेषे लभते सुपुत्रम् ।
सिद्धार्थमूर्तिं परिपूर्णदेहं [3]शस्त्रेण शास्त्रेण विशारदीकृतम् ॥ 3 ॥

उन्मूलयित्वा जलशीतलाया आदाय मूलं निहितं शिरोजे ।
सप्ताभिमन्त्रीकृतकं तदेव नाशेज्ज्वरान् वार्षिककान् क्षणेन ॥ 4 ॥

आदाय मूलं कनकस्य योगी चातुर्थिकेनापि निपीडितस्य ।
शिरोरुहे तं परिधाय योज्य ज्वरगृहीतस्य ज्वरानपास्येत् ॥ 5 ॥

इष्टवाल( इक्ष्वार ) [4]मूलं लवणारनालं द्विरेफराजस्य रसेन युक्तम् ।
ताम्रे च पात्रे स्तनघृष्टपिष्टं करोति काचस्य विनाशनञ्च ॥ 6 ॥

मूलं समुन्मूल्य [5]सितोच्चटस्य दुग्धेन पिष्ट्वा तु पिबेद्यथेष्टम् ।
[6]ऊर्ध्वं भवेल्लिङ्गवरं नृपाणां मन्त्रेण चानेन शतार्द्धजप्तम् ॥ 7 ॥

---

1 अथ........वाच–नास्ति भो० ।
2 पुत्रकामा–भो० ।
3 लक्षणेन लक्षितं–भो० ।
4 धूमं–भो० ।
5 फलो–भो० ।
6 व्यतिक्रमो वर्तते पाठस्य अत्र भोटानुसारेण एकादशमः श्लोकोऽस्ति ।

गोरोचनं निर्दशनस्य लोलां नृराजमूलानि शुभे च ऋक्षे ।
कार्यं च तेन तिलकं ललाटे मध्ये त्रिलोकस्य वशाय युक्तम् ॥ 8 ॥

मृतस्य नेत्रं हृदयं च लोलां ललाटमांसं च तथैव नासिकाम् ।
संगृह्य पिष्ट्वा च विपाच्य तैलं पुष्ये च ऋक्षे वशकृज्जनस्य ॥ 9 ॥

फणीन्द्रराजस्य शिरोऽञ्जनेन रक्तेन [1]शुक्रेण कुसुम्भनाम्ना ।
तेनाञ्जनेनाञ्जितलोचनास्तु राज्ञो महिषीं वशमानयन्ति ॥ 10 ॥

नागाभिधाना हि वला प्रसिद्धा दुग्धान्विता सा च करोति लिङ्गे ।
[2]बलं सशुक्रं सजलं जनानां मन्त्रेण चानेन शतार्द्धजप्तम् ॥ 11 ॥

अनेन मन्त्रेण शतार्द्धजप्तौ पादाववनौ यत्र निवेशयेच्च ।
जानन्ति वित्तानि महीं गतानि तयोर्द्वयोः स्पन्दनमात्रकेण ॥ 12 ॥

पादौ शिरः स्फुरति चोर्ध्वगतो भवेच्च
तद्दूरगे द्रविणमस्ति वदन्ति सिद्धाः ।
यत्रास्ति वित्तमिति सौत्रपुरस्सरेण
विद्याधरेण वसुधातलशिक्षितव्यम् ॥ 13 ॥

छुच्छुन्दरिकाचूर्णं गुग्गुलसार्धं प्रलेपमात्रेण ।
मत्तद्विपकलिते पथि तेनाभ्यस्तः सुखं प्रयाति ॥ 14 ॥

अत्यन्तकृष्णा कुक्कुरीपयसि समुत्थितेन सर्पिषा लिप्तम् ।
करभत्वङ्निष्पन्नं पादुकमाक्रम्य नीरे भ्रमति ॥ 15 ॥

पिंगलकाकसकूचकण्ठकं गृहमध्ये गोप्य कन्दवालस्य ।
मदिरानाशनं कुरुते तस्योन्मूलेन भद्रिका भवति ॥ 16 ॥

---

1 མིང་ངན་གཙོད། -भो० ।

2 མཚན་མ་སྙོབས་བསྐྱེད་བུ་འཕེལ་བུ་ཚ་བསྐྱེད། -भो० ।

पाके कुलालरचिते वज्राहतकाष्ठवापनाद्वह्निः ।
न ज्वलतीति [1]न चित्रं मद्यसेकात्प्रज्वलति ।। 17 ।।

मन्त्रं जप्त्वा मूल्यं प्रसार्य वृत्तिं लोकानाम् ।
विक्रयमकरोद्योगी अतिवित्ता भवन्ति वणिजाः ।। 18 ।।

मर्क्कटगूथाक्षेपाद्वीजेन मदिरा नाग( श )तां याति ।
वकुलोदकलेपाद्भाण्डं तच्च पुनः योग्यम् ।। 19 ।।

वकुलदलवारिसेवनात् स्थानलाभवन्ति मातराः ।
सदा धूपाद्भूतकेशात्काषायप्रावृताच्चापि ।। 20 ।।

स्वल्पमुद्गिरतो बालो लेपात् शिखिपिच्छभस्मनो गलके ।
स्वस्थः स्यात् पुनरेतद्योगवरप्रभावेण ।। 21 ।।

[2]पदशशका विधियुक्ता विदधति शीशकदले सदा खनिताः ।
बन्धनशस्त्रानीते नागवदनोदरनिहिताः ।। 22 ।।

क्ष म र य कारैर्युक्ताः पिण्डाश्चेकारभूषिताः सर्वे ।
पद[3]शशकानामन्तश्च[4]तुरस्रः योजयेद्धीमान् ।। 23 ।।

[5]ऐकारो बिन्दुरेकः क ष इति च त टः षष्ठवर्ग्गान्तसंस्थो
बीजं वायोररन्ध्रं ज्वलनपरिगतं बिन्दुशून्योत्तमाङ्गम् ।
आग्नेयाच्चात्तवर्गः प्लुतमपरततः सर्ववर्णाग्रसंस्था
एते संपत्तिमग्रां विदधति न( नि )यतं नामयोगं विनैव ।। 24 ।।

दृष्टप्रत्ययोऽयं संप्रयोगः ।

---

1 अग्निः-भो० ।
2 पदकवका-भो० ।
3 कवका-भो० ।
4 སྒྲོ་ང་བཞི་དང་ཚད་གསུམ་གཉིས་གཉིས་སྦྱིན།-भो० ।
5 ऐकारो......संप्रयोगः-नास्ति भो० ।

दण्डोत्पलशरपुंखानि चूलगिरिकर्णिकायाश्च तोयेन ।
सप्तनिषेकं दत्त्वा शीशकपत्रे लिखेद्धीमान् ।। 25 ।।

हडिनिगडानां बद्धं शस्त्राणां वर्षणं च संग्रामे ।
अन्येषामप्यप्रीतिं निहन्ति सिद्धं महामन्त्रम् ।। 26 ।।

बाहौ विद्यां कृत्वा यो धत्ते मन्त्रराजमभिलिख्य ।
स भवति धनदसमाढ्योऽक्षयवित्तोऽधृष्यश्च ।। 27 ।।

ॐ कुरुकुल्ले ह्रीः हूँ स्वाहेति अनेन मन्त्रेण ।
पात्रमालभ्य देशे दुर्भिक्षतरे भिक्षुर्भिक्षाशनं लभते ।। 28 ।।

उत्पलकन्दकशेरुं क्षीरेणालोड्य या पिबेन्नारी ।
स्तम्भयति सा गर्भं नियतं तत्कर्म स्वकेनापि ।। 29 ।।

मागधिकापञ्चफलं पिष्ट्वा दुग्धेन या पिबेन्नारी ।
प्रसवति सा सुखयुक्ता एतन्मन्त्रप्रभावेण ।। 30 ।।

निम्बवारुणं पत्रं पिष्ट्वा वज्रोदकेन तस्याः ।
योनौ लेपं दद्यात्प्रसवति नारी सुखपातान् ।। 31 ।।

गजमागधिका सवचोऽश्वगन्धा माहिष्यञ्च नवनीतम् ।
वलायुक्तो योगः कुरुते स्तनसाधने वृद्धिम् ।। 32 ।।

[1]कुम्भाण्डीफलयुक्तो योगः कुरुते मूलसाधने वृद्धिम् ।
अशने भुंक्ते सर्वथा वा तोयं पिबेच्च नासिकया ।
शिरसोऽकालपलितं स्तम्भयति स मन्त्रयोगात्मा ।। 33 ।।

---

1 कुम्भाण्डी......वृद्धिम्–नास्ति भो० ।

अवन्तिकाया मूलं काकमाचीकनकबीजसंयुक्तम् ।
कर्पूरनीरपिष्टं वराङ्गलेपाद्द्रवन्ति घननार्यः ।। 34 ।।

अच्युतसुरता विरता न वशति पतौ नादरं च कुर्यात् ।
मारणमपि विदधाति तच्च्युतिहेतोरयं लेपः ।। 35 ।।

[1]सुकरे तैलाधारे दीपं प्रज्वाल्य सुरतसंगमेऽपि ।
आशुकामोऽपि नरो यः सुचिरं श्रोण्यां वशे( से )न्नार्याः ।। 36 ।।

वज्रानले गृहदाहे मद्यं प्रोष्यन्ति ये नरा मन्त्रैः ।
निर्वापयन्ति वह्निं योगोऽयं लोकनाथसंगदितः ।। 37 ।।

[2]अथापरोऽपि प्रयोगो भवति।

चन्द्रमण्डलमध्ये दशदलमुत्पलं लिखित्वा प्रत्येकदलाग्रे ॐ तारे तुत्तारे स्वाहेति विलिख्य वरटकेऽपि तांकारमध्ये देवदत्तं वशमानयेति। तांकारमपि ॐ अः कुरुकुल्ले देवदत्तं वशमानय ह्रीः इत्यनेन वेष्टयेत्। चन्द्रमण्डलबहिः ॐ प्रसन्नतारे प्रसन्नकारिणि देवदत्तं वशीकुरु ह्रीः इत्यनेन मन्त्रेण वेष्टयित्वा बहिः षोडशदलमुत्पलं विलिख्य प्रत्येकदलाग्रे ॐ प्रसन्नतारे प्रसन्नकारिणि ह्रीः देवदत्तं वशीकुरु ह्रीः इत्यनेन मन्त्रेण वेष्टयित्वा त्रिषोडशभिरक्षरैर्वेष्टयेत्। लाक्षागोरोचनेन रक्तचन्दनेन कुङ्कुमकर्पूरकैः भूर्ज्जपत्रे सिक्थकेन वेष्ट्य त्रिमधुरे स्थाप्य रक्तोपचारेण त्रिसंध्यं पूजयेत् वशीभवति न संदेहः।। 38 ।।

अथापरोऽपि प्रयोगो भवति। षोडशदलमुत्पलं विलिख्य प्रत्येकदले अ आ इ ई उ ऊ ऋ ॠ लृ ॡ ए ऐ ओ औ अं अः चन्द्रमण्डलमध्ये वरटकेऽपि। ॐ हः कुरुकुल्ले देवदत्तं वशमानय हः स्वाहा। उत्पलबाह्ये ॐकारपंक्तित्रयेण परिवेष्ट्य वशीभवति। एवमवोचन्नाथः पर्षन्मध्ये स्थिताश्च ये सत्त्वाः पोतलके पर्वतराजे परदुःखदुःखितो भगवान् ।। 39 ।।

---

1 शूकर-भो०।
2 अथाऽपरोऽपि.......परिवेष्ट्य वशीभवति-नास्ति भो०।

तन्नास्ति [1]यन्न बुद्धभूताः सत्त्वार्थकारिणो नियतं नेयमपूर्वा चर्या नष्टा नैनां पुनश्चक्रुः ।। 40 ।।

इदमवोचद्भगवानार्यावलोकितेश्वर [2]आत्तमनास्ते च बोधिसत्त्वाः महासत्त्वाः सा च सर्वावती पर्षत् सदेवमानुषासुर[3]गरुडगन्धर्वश्च लोको अवलोकितेश्वरभाषितमभ्यनन्दन्निति ।। 41 ।।

**इति श्रीभगवत्यार्यताराया: कुरुकुल्लाकल्पोऽष्टमः समाप्तः[4] ।। 8 ।।**

●

1 संपन्न-ग.घ.।

2 आत्तमनास्ते...सा च-नास्ति भो०।

3 गरुड-नास्ति भो०।

4 ये धर्मा हेतुप्रभवा हेतुस्तेषां तथागतो ह्यवदत् ।
तेषां च यो निरोध एवं वादी महाश्रमणः ।।
नेपालाब्द गगणसागरमागे मास ज्येष्ठकृष्णाष्टमी संपूर्ण कृतमिति। लिखितं तं लाच्छिटोल ध्वाका बालहेनाकर महाविहार श्री 3 वज्रदेवीचरणस्य वितब्रह्मपुत्रनदिपार ह्वासानाम क्षत्र द्योरास्य पास सोव्यपालस्य चोना व्येलरश्च पुस्तक चोया जुल शुभम्-क.।

# ཅོམ་གྱི་ངོ་སྤྲོད་མདོར་བསྡུས།



དཔལ་འཇིགས་རྗེད་དབང་ཕྱུག་ཀུན་ཏུ་དགའ་བ་མཛེས་པ་བརྒྱད་པའི་བསྟོད་པ་དང་། དཔལ་དཀོན་མཆོག་གསུམ་མཛེས་པ་བཅུ་དྲུག་པའི་བསྟོད་པ་འདི་གཉིས་པོ་ནེའུ་ཡོཀ་གཙུག་ལག་སློབ་ཁང་ (Institute for Advance Studies of World Religions, NewYork) ནས་དེ་སྔ་དཔར་སྐྲུན་མ་ཟིན་པའི་རྩ་བའི་མ་དཔེ་འཇིགས་རྗེད་དབང་ཕྱུག་གི་ཚིགས་བཅད་བསྡུས་པ་ཞེས་པ་ལས་བླངས་པ་ཞིག་ཡིན།



དུས་དེབ་འདོན་ཐེངས་སྔ་མ་གཉིས་ཀྱི་ནང་སློབ་དཔོན་འཕགས་པ་ལྷས་མཛད་པའི་སྤྱོད་པ་བསྡུས་པའི་སྒྲོན་མའི་ལེའུ་དང་པོ་གསུམ་གྱི་བསྡུས་དོན་བསྟན་ཟིན་པ་དང་། འདོན་ཐེངས་འདིར་གཞུང་དེའི་ལེའུ་བཞི་པ་ཡིད་དབེན་ ( ཕྱག་རྒྱའི་དེ་ཁོ་ན་ཉིད་ ) དང་ལེའུ་ལྔ་པ་ལས་ཀྱི་མཐའ་རྣམ་པར་འབྱེད་པ་ཧིན་སྐད་དུ་ཕབ་བསྒྱུར་གྱིས་བཀོད་ཡོད།



དུས་དེབ་འདིའི་ནང་བཪྗོད་གཞི་འདིའི་འོག་སློབ་དཔོན་དཔལ་བརྩོན་འགྲུས་བཤེས་གཉེན་གྱིས་མཛད་པའི་དེ་ཁོ་ན་ཉིད་ཡེ་ཤེས་གྲུབ་པའི་རྒྱ་ཆེར་འགྲེལ་གྱི་ནང་གསལ་བའི་ལུང་འདྲེན་ཁག་ཕྱོགས་བཏུས་བྱས་པ་བཀོད་ཡོད། གོང་གསལ་གྱི་ཕྱག་དཔེ་དེ་འདི་ག་མཐོ་སློབ་ཁང་གིས་ཆེས་དཀོན་ནང་པའི་གསུང་རབ་སྡེ་ཚན་གྱི་པོད་ཕྲེང་གི་ཁོངས་སུ་དཔར་སྐྲུན་ཞུས་ཡོད།

### ནང་པའི་གསུང་རབ་ཉམས་པ་ཁག་གི་ཕྱོགས་བཏུས། ཁ་སྐོན། ༢༧ - ༤༢

དྷཱིཿདུས་དེབ་འདོན་ཐེངས་དང་པོ་ནས་བརྒྱད་པའི་བར་བཀོད་པའི་ནང་པའི་གསུང་རབ་ཉམས་པ་ཁག་ཕྱོགས་བཏུས་བྱས་པ་རྣམས་ཕྱོགས་གཅིག་ཏུ་“ནང་པའི་གསུང་རབ་ཉམས་པ་ཕྱོགས་བཏུས་”དེབ་དང་པོ་སྤྱི་ལོ་ ༡༩༩༠ ལོར་ལོགས་སུ་དཔར་སྐྲུན་ཞུས་ཡོད། དེའི་རྗེས་སུ་འདོན་ཐེངས་དགུ་པ་ནས་བཅུ་བཞི་པའི་བར་དུ་བཀོད་པའི་ཁ་སྐོན་སྣ་ཚོགས་དུས་དེབ་བཅོ་ལྔ་པའི་ནང་དཔར་བསྐྲུན་བྱས་ཡོད། དེའི་རྗེས་ཀྱི་དུས་དེབ་འདོན་ཐེངས་འགའ་ཤས་སུ་འགོ་བརྗོད་འདིའི་འོག་ཁ་སྐོན་སྣ་ཚོགས་ཡོད་པ་ནས། དུས་དེབ་བཅུ་དྲུག་པ་ནས་སུམ་ཅུ་པའི་བར་དུ་བཀོད་པའི་ནང་པའི་གསུང་རབ་ཉམས་པ་ཁག་གི་ཁ་སྐོན་རྣམས་ད་ལན་དུས་དེབ་འདོན་ཐེངས་འདིའི་ནང་བཀོད་ཡོད། དེ་དང་མཉམ་དུ་དྷཱིཿའདོན་ཐེངས་ཉི་ཤུ་པའི་ནང་བཀོད་པའི་ཟུར་ཆག་སྐད་ཀྱི་གསུང་རབ་རྣམས་ཀྱི་དཀར་ཆག་ཀྱང་སློབ་གཉེར་བ་རྣམས་ལ་ཉམས་ཞིབ་ཀྱི་མཐུན་རྐྱེན་བདེ་བླག་ཏུ་ཐོབ་ཆེད་བཀོད་ཡོད།

### སྔགས་བཏུའི་སྐོར་ལ་དཔྱད་པ། ༤༣ - ༧༣

སྔགས་ཀྱི་བསྟན་བཅོས་རྣམས་སུ་གཟུངས་སྔགས་ནི་རང་ཆས་ཀྱི་ཚུལ་དུ་གནས་ཡོད། རྒྱུད་གཞུང་རྣམས་ཞུ་བསྒྲིགས་བྱེད་སྐབས་གཟུངས་སྔགས་ཞུས་དག་བྱེད་རྒྱུ་ནི་དཀའ་ངལ་གྱི་གནས་ཞིག་ཡིན། དཀའ་ངལ་འདི་འདྲ་བ་འགའ་ཞིག་རྒྱུད་གཞུང་རྣམས་སུ་གསལ་བའི་སྔགས་བཏུའི་ཚིག་ལས་བསལ་ཐུབ། ཆེད་རྩོམ་འདིའི་ནང་འཁོར་ལོ་བདེ་མཆོག རྡོ་རྗེ་འཇིགས་བྱེད། ཧེ་རུ་ཀ། ཀྱེ་རྡོ་རྗེའི་རྒྱུད་བཅས་ཀྱི་གཟུངས་སྔགས་འགའ་ཞིག་གི་སྔགས་བཏུའི་ཚིག་རྣམས་ལ་དཔྱད་པ་བྱས་ཤིང་། དེ་དང་ལྷན་དུ་ཐབས་ཚུལ་འདིའི་སྒོ་ནས་གཟུངས་སྔགས་སྒྲུབ་ཚུལ་དཔེ་དང་བཅས་པ་བསྟན་ཡོད།

### སྔགས་བླ་མེད་རྒྱུད་ཀྱི་རྡོ་རྗེའི་ལུས་ལ་དཔྱད་པ། ༧༣ - ༨༤

ནང་པའི་རྒྱུད་གཞུང་ནང་སྒོམ་སྒྲུབ་ཀྱི་ཐབས་ལ་བསྐྱེད་རིམ་དང་རྫོགས་རིམ་གཉིས་ཡོད། སྒྲུབ་

ཐབས་འདིའི་མཐར་ཐུག་ནི་རྫོགས་རིམ་ཡིན། ཆེད་རྩོམ་འདིའི་ནང་རྫོགས་རིམ་གྱི་སྒྲུབ་ཐབས་ལ་གཞི་རྟེན་རྡོ་རྗེའི་ལུས་དང་། དེ་ལ་ཉེ་བར་མཁོ་བའི་དངོས་པོ་དེ་དག་གི་སྐོར་ལ་བཤད་ཡོད། རྫོགས་རིམ་སྒྲུབ་ཐབས་ཀྱི་གཞིར་གྱུར་པའི་དངོས་པོ་ལ་བྱང་ཆུབ་ཀྱི་སེམས། སྟོང་པ་ཉིད། སྙིང་རྗེ། རྩ་(དབུ་མ་དང་རྐྱང་མ་དང་རོ་མ་) རླུང་དང་ཐིག་ལེ་ལ་སོགས་པ་རྣམས་ཀྱི་སྐོར་ལ་མདོར་བསྡུས་ཏེ་གསལ་བཤད་བྱས་ཡོད།

ཆོས་དཀོན་གསུང་རབ་ཁག་གི་རྩ་བའི་མ་དཔེ། ༨༤ - ༡༡༡

ཧྥཱ༔དུས་རབ་འདོན་ཐེངས་ཉེར་དགུ་པའི་ནང་འགོ་བརྗོད་འདིའི་འོག་གལ་ཆེའི་གསུང་རབ་ལག་བྲིས་མ་དགུ་བཅུ་གོ་གཅིག་གི་སྐོར་བསྟན་ཟིན་པ་དང་། འདོན་ཐེངས་འདིའི་ནང་དེ་འཕྲོས་ཀྱི་གསུང་རབ་ལག་བྲིས་མ་བདུན་ཅུ་དོན་ལྔའི་སྐོར་གྱི་གནས་ཚུལ་བཀོད་ཡོད།

ཆོས་དཀོན་གསུང་རབ་ཁག་གི་རྩ་བའི་མ་དཔེ། ཁ་སྣོན།
(དུས་རབ་ ༡༦ ནས་ ༢༠ བར་) ༡༡༢ - ༡༣༩

ཧྥཱ༔དུས་རབ་དང་པོ་ནས་བརྒྱད་པའི་བར་གྱི་ནང་འགོ་བརྗོད་འདིའི་འོག་ཕྱི་ནང་ཡུལ་གྲུ་ཁག་གི་དཔེ་མཛོད་ཁང་དུ་བདག་གཉེར་བྱས་པའི་གལ་ཆེ་བའི་གསུང་རབ་ལག་བྲིས་མ་ཉིས་བརྒྱ་བདུན་ཅུ་དོན་གཅིག་ཙམ་གྱི་ངོ་སྤྲོད་ཞུས་པ་རྣམས་ཕྱོགས་བསྡེབས་ཀྱིས་ཆོས་དཀོན་གསུང་རབ་ཀྱི་རྩ་བའི་མ་དཔེའི་དེབ་དང་པོ་སྤྱི་ལོ་ ༡༩༩༠ ལོར་དཔར་སྐྲུན་ཞུས་ཡོད། དེ་རྗེས་དུས་རབ་དགུ་པ་ནས་བཅུ་བཞི་པའི་བར་དུ་གསལ་བའི་གསུང་རབ་ལག་བྲིས་རྣམས་ལྷན་ཐབས་ཀྱི་ཚུལ་དུ་དུས་རབ་བཅོ་ལྔ་པའི་ནང་བཀོད་ཡོད། ཧྥཱ༔དུས་རབ་དགུ་པ་ནས་ཉེར་གཅིག་པའི་བར་དུ་འཕོད་པའི་གསུང་རབ་ལག་བྲིས་རྩ་བའི་མ་དཔེ་ཆིག་སྟོང་ཆིག་བརྒྱ་བཞི་བཅུ་ཞེ་བརྒྱད་ཡོད་པ་རྣམས་ཆོས་དཀོན་གསུང་རབ་ཀྱི་རྩ་བའི་མ་དཔེ་དེབ་གཉིས་པའང་དཔར་སྐྲུན་ཞུས་ཟིན།

འདོན་ཐེངས་འདིར་རྡྷིཿདུས་དེབ་བཅུ་དྲུག་པ་ནས་ཉེར་དགུ་པའི་བར་དུ་བཀོད་པའི་གསུང་རབ་ཁག་དང་དེ་དག་མཛད་པ་པོའི་མཚན་བྱང་རྣམས་ཉམས་ཞིབ་པ་རྣམས་ལ་སྟབས་བདེའི་ཐོག་ནས་རྙེད་ཐབས་སུ་ཀ་མད་རིམ་པ་བཞིན་བཀོད་ཡོད།

### སྙན་རྒྱུད་རྗེས་འབྲངས་ཀྱི་རྡོ་རྗེ་ཐེག་པའི་མངོན་པར་བྱུང་བ། ༡༣༧ - ༡༦༨

རྡྷིཿདུས་དེབ་བཅུ་གསུམ་པའི་ནང་རྡོ་རྗེ་ཐེག་པའི་མངོན་པར་བྱུང་བའི་འགོ་བརྗོད་ཀྱི་འོག་དགོངས་རྒྱུད་དང་། བར་རྒྱུད། སྙན་རྒྱུད་བཅས་གསུམ་པོ་དེ་དག་གི་ངོ་སྤྲོད་མདོར་བསྡུས་ཞུས་ཡོད། འདོན་ཐེངས་འདིར་སྙན་རྒྱུན་རྗེས་འབྲངས་ཀྱི་རྡོ་རྗེ་ཐེག་པའི་མངོན་པར་བྱུང་བ་ཞེས་པའི་ངོ་སྤྲོད་སྤྱིར་བཏང་ཙམ་ཞུས་ཡོད།

### བཤེས་སྤྲིངས་དང་དེའི་རྒྱ་ཆེར་བཤད་པ་ཚིག་གསལ་གྱི་ལེགས་སྦྱར་དུ་བསྒྱུར་གསོའི་སྐོར་ལ་བསྒྱུར་ཞིབ། དང་པོ། ༡༦༩ - ༡༧༨

ཆེད་རྩོམ་འདིའི་ནང་སློབ་དཔོན་ཀླུ་སྒྲུབ་ཀྱིས་མཛད་པའི་བཤེས་སྤྲིངས་དང་སློབ་དཔོན་བློ་གྲོས་ཆེན་པོས་མཛད་པའི་སྤྲིངས་ཡིག་རྒྱ་ཆེར་བཤད་པ་ཚིག་གསལ་གཉིས་ལེགས་སྦྱར་དུ་བསྒྱུར་གསོ་བྱེད་སྐོར་དང་སྦྲགས། གཞུང་དེ་དག་གི་པར་མ་མི་འདྲ་བ་ཁག་གི་སྐོར། གཞུང་གི་གལ་གནད། སྟོན་པ་བཅོམ་ལྡན་འདས་ཀྱིས་སྩལ་བའི་ཆོས་འཁོར་རིམ་པ་གསུམ་པོ་དྲང་ངེས་འབྱེད་ཚུལ། གཞུང་གི་བརྗོད་བྱའི་སྐོར། སློབ་དཔོན་གྱི་བྱུང་རིམ་དང་གྲུབ་མཐའ། སློབ་དཔོན་གྱི་མཛའ་གྲོགས་རྒྱལ་པོ་མཐར་འགྲོ་བཞིན་གོ་ཏམིཔུཏྲའི་སྐོར་བཅས་གསལ་བཤད་མདོར་བསྡུས་བྱས་ཡོད།

### ཐེག་ཆེན་གྱི་མདོ་སངས་རྒྱས་ཀྱི་བཀར་སྒྲུབ་པ། ༡༧༩ - ༡༨༦

ཐེག་ཆེན་དང་ཐེག་དམན་གཉིས་ཀ་སངས་རྒྱས་བཅོམ་ལྡན་འདས་ནས་བྱུང་བའི་ཆོས་ངོ་མ་ཡིན། ཐུབ་པ་བཅོམ་ལྡན་འདས་ཀྱིས་ཆོས་འཁོར་རིམ་པ་གསུམ་གའི་ནང་དེ་དག་གི་གདམས་ངག

བསྟན་ཡོད། དོན་ཀྱང་གནས་བརྟན་པ་རྣམས་ཀྱིས་ཐེག་པ་ཆེན་པོ་སངས་རྒྱས་ཀྱི་གསུང་མ་ཡིན་པ་བཞེད་ཀྱི་ཡོད། ཆེད་རྩོམ་འདིའི་ནང་གོང་གི་ལོག་རྟོག་ཐམས་ཅད་བསལ་ཕྱིར་ཐེག་པ་ཆེན་པོའི་མདོ་ནས་ལུང་ཁུངས་བླངས་ཏེ་ཚད་མ་དང་བཅས་པའི་སྒོ་ནས་ཐེག་པ་ཆེན་པོ་སངས་རྒྱས་ཀྱི་བཀའ་ཡིན་པར་སྒྲུབ་རྒྱུའི་འབད་བརྩོན་བྱེད་ཡོད།

### ནང་པའི་ཐུན་མིན་ཆོས་ཚིག་རྣམས་ཀྱི་ཀ་མད་རིམ་པ། ཁ་སྟོན། ༡༨༧ - ༡༩༢

ཀླིཿདུས་རབ་ཀྱི་འདོན་ཐེངས་འདིར་ཉམས་ཞིབ་པ་རྣམས་ལ་གཟིགས་བདེའི་ཆེད་དུས་རབ་དགུ་པ། ཉི་ཤུ་རྩ་ལྔ་པ་དང་། ཉི་ཤུ་རྩ་དགུ་པའི་ནང་དཔར་སྐྲུན་ཞུས་པའི་ཆོས་ཚིག་བཏུས་པ་རྣམས་ཀ་མད་རིམ་པ་བསྟན་པ་དང་ཆབས་ཅིག ཆོས་ཚིག་དེ་དག་གི་འགྲེལ་པའི་ནང་ནས་བྱུང་བའི་ཆོས་ཚིག་རྣམས་ཀྱི་ཀ་མད་རིམ་པའང་ལོགས་སུ་བཀོད་ཅིང་། སྔར་བསྟན་པའི་དུས་རབ་རྣམས་སུ་སྤྱན་རས་གཟིགས་དབང་ཕྱུག་(ཀལྐིཔུཎྜརཱིཀ) གིས་མཛད་པའི་བསྡུས་པའི་རྒྱུད་ཀྱི་རྒྱལ་པོ་དུས་ཀྱི་འཁོར་ལོའི་འགྲེལ་བཤད་དྲི་མེད་འོད་ཀྱི་དེབ་གསུམ་པ་དང་། རྣལ་འབྱོར་མ་ཀུན་ཏུ་སྤྱོད་པའི་རྒྱུད། དེ་ལ་ཏཐཱགཏརཀྵིཏས་མཛད་པའི་བཤད་སྦྱར་དང་ཨལཀ་ཀལཤས་མཛད་པའི་འགྲེལ་པ། སློབ་དཔོན་འཕགས་པ་ལྷས་མཛད་པའི་སྤྱོད་པ་བསྡུས་པའི་སྒྲོན་མ་ལ་སོགས་པའི་གཞུང་རྣམས་ལས་བྱུང་བའི་ཐུན་མིན་ཆོས་ཚིག་རྣམས་བཏུས་ཏེ་བཀོད་ཡོད།

### ཀླིཿདུས་རབ་ཁག་ལ་བསྐྱར་ཞིབ། (དུས་རབ་༡༨ ནས་༢༠ བར) ༡༩༣ - ༢༡༠

ནང་པའི་གཞུང་ལ་དོན་གཉེར་ཅན་རྣམས་དང་ལྷག་པར་དུ་ཉམས་ཞིབ་པ་རྣམས་ལ་གནས་ཚུལ་འདྲ་མིན་གྱི་སྐོར་བསྟན་པའི་ཉམས་ཞིབ་དུས་རབ་ནི་ཀླིཿའདི་གཅིག་པུ་རེད། དུས་རབ་འདིའི་ནང་དཔར་སྐྲུན་ཞུས་པའི་ཆེད་རྩོམ་ཁག་དང་ཆེས་དཀོན་གསུང་རབ་དང་འབྲེལ་བའི་སྐོར་ལ་ཤེས་རྟོགས་ཡོང་བའི་ཕན་གྲོགས་རྒྱ་མི་ཆུང་བ་ཐོབ་ཀྱི་ཡོད་པ་ནི་རྒྱ་ཆེའི་ཀློག་པ་པོ་རྣམས་ཀྱི་གསུང་འཕྲིན་ལས་ཤེས་རྟོགས་བྱུང་སོང་། དུས་རབ་འདོན་ཐེངས་རེ་རེའི་ནང་ཆེད་རྩོམ་ཇི་ཡོད་སྐོར་ཚང་

མས་མཁྱེན་དཀའ་བས། ང་ཚོས་དུས་དེབ་འདོན་ཐེངས་འགར་བརྟོན་པའི་ཆེད་རྩོམ་རྣམས་ཀྱི་སྐོར་དུས་དེབ་འདོན་ཐེངས་འགའ་ཤས་ཀྱི་རྗེས་སུ་བསྡུས་ཏེ་མཉམ་འདོན་བྱ་རྒྱུའི་ཐག་གཅོད་བྱས་ཤིང་། དེ་ལས་ཉམས་ཞིབ་པ་རྣམས་ཀྱིས་རང་ཉིད་ལ་མཁོ་བའི་ཆེད་རྩོམ་ཁག་གི་གནས་ཚུལ་འཚོལ་ཐུབ་པའི་ཆེད་དུ་དཔར་སྐྲུན་ཟིན་པའི་དྷཱིཿདུས་དེབ་དང་པོ་ནས་བཅོ་ལྔ་པའི་བར་གྱི་ཆེད་རྩོམ་རྣམས་ཕྱོགས་བསྡེབས་བྱས་ཏེ་དུས་དེབ་བཅོ་ལྔ་པའི་ནང་བཀོད་ཡོད། འདོན་ཐེངས་འདིའི་ནང་དུས་དེབ་བཅུ་དྲུག་པ་ནས་སུམ་ཅུ་པའི་བར་གྱི་དཔར་སྐྲུན་ཞུས་པའི་ཆེད་རྩོམ་རྣམས་ཀྱི་སྐོར་བཀོད་ཡོད།

## འཕགས་མ་སྒྲོལ་མ་ཀུརུཀུལླེའི་རྟོག་པ། ༢༡༡ - ༢༤༠

དྷཱིཿདུས་དེབ་ཀྱི་འདོན་ཐེངས་འདིར་འཕགས་མ་སྒྲོལ་མ་ཀུརུཀུལླའི་རྟོག་པ་ཞེས་བྱ་བའི་གཞུང་ཞིག་དཔར་སྐྲུན་ཞུས་ཡོད། གཞུང་འདི་ལེགས་སྦྱར་གྱི་མ་དཔེ་ཁག་དྲུག་དང་བོད་འགྱུར་པར་མ་བཅས་ལ་གཞི་རྟེན་བྱས་ཏེ་ཞུས་བསྒྲིགས་བྱས་ཡོད། གཞུང་འདིའི་ལེགས་སྦྱར་དང་བོད་འགྱུར་གཉིས་ཀྱི་ནང་རྟོག་པའི་འབྱེད་མཚམས་ལ་མི་མཐུན་པ་ཅུང་ཟད་དང་སྐབས་འགར་པར་མའི་ཁྱད་པར་ཡང་ཕྲན་བུ་ཡོད་པ་རྣམས་འོག་མཆན་དུ་བཀོད་ཡོད། གཞུང་འདི་ནི་རྗེ་བཙུན་འཕགས་མ་སྒྲོལ་མ་དང་འབྲེལ་ཞིང་གནད་ཆེ་བའི་རྟོག་པའི་གཞུང་ཞིག་ཡིན།

• • •

## ABSTRACT OF ARTICLES

*Śrīlokeśvarānandasundarāṣṭakam* 1-4

These two hymns viz. *Śrīlokeśvarānandasundarāṣṭakam* and *Śrītriratnasundaraṣoḍaśīstotram* have been taken from '*Lokeśvaragāthā-saṁgraha*', unpublished manuscript obtained from the Institute for Advance Studies of World Religion, New York.

*Cittaviveka and Karmāntavibhāga* 5-16

In the previous issues, three chapters of Ācārya Āryadeva's *Caryāmelāpakapradīpa* had been given in brief. In the current issue, the Hindi translation of the fourth chapter *Cittaviveka* (*Mudrātattva*) and fifth chapter Karmāntavibhāga are being presented.

*Compilation of Lost Bauddha Vacanas* 17-26

Under this title in the present issue *Vacanas* cited in the *Marmakalikā*, the commentary of *Tattvajñānasaṁsiddhi* by Ācārya Vīryaśrīmitra have been collected and being presented. The above mentioned text has been published under Rare Buddhist Texts Series of the Tibetan Institute, Sarnath.

*Compilation of Lost Bauddha Vacanas : Appendix* 27-42

Under the above title the *Lupta Bauddha Vacana Saṅgraha* Vol. I, with extracts from I$^{st}$ to 8$^{th}$ issues of the *Dhīḥ* journal have been published separately in 1990. Subsequently, various appendixes of material of *Dhīḥ* from Vol. 9 to 15 have already been given in Vol. 15. After that in some issues material have been published under the same title. In the present issue appendix of *Lost Bauddha Vacanas* mentioned in from Vol. 16 to 30 are being given. Along with it an index of *Apabhraṁśa Vacanas* collected

from the 20th issue is also being presented, so that research materials are easily accessible to the researchers.

*Mantroddhāra : A Review* *43-72*

In tantra texts mantras are closely connected. At the time of editing of tantric texts, preciseness of mantras became a problem. Some solution of the problems can be done with the help of the *Mantroddhāra Vidhi* (methodology of mantras) mentioned in the tantric texts. In the current article an analysis of *Mantroddhāra Vidhi* of some mantras such as *Cakrasaṁvara, Vajrabhairava, Heruka* and *Hevajra* have been analysed and at the same time formulation of mantras through this procedure has been presented.

*Concept of Diamond Body in the Highest Yoga Tantra* *73-84*

In the Buddhist Tantric practice there are two stages viz., the generation and the completion. The climax of the *sādhanā* is the stage of the completion. In this article, the *Vajradeha* (Diamond body), the basis for the *sādhanā* of the stage of completion and necessary essence by which the *sādhanā* is completed has been discussed. The basic essence of the stage of completion such as Bodhi mind, Emptiness, Compassion, Channels (left, right and central Channel), wind and drop etc. have been explained.

*Sources of Rare Texts* *85-111*

Under this title in the 29th issue of *Dhiḥ*, information was given on 91 important hand-written manuscripts. In the present issue, information about rest of 75 hand-written mss. being given.

*Sources of Rare Texts : Appendix* *112-134*

Under this title, in the first eight issues information of about 271 important hand-written tantric manuscripts preserved in the collections in

inland & abroad had been given, published under the title of *Durlabha Granthon Kī Ādhāra Sāmagrī* Part-I. Subsequently, source materials of *Dhiḥ* from Vol. 9th to 14th had already been presented as a varied appendix in the 15th issue. Materials of *Dhiḥ* from Vol. 9 to 21 in which 1148 hand-written manuscripts in original had been published under the title of *Durlabha Granthon Kī Ādhāra Sāmagrī* Part-II. In the present issue alphabetical order of texts & authors of the source materials published in *Dhīḥ* nos. 16-29 are being given, so that, materials can be easily available to the researches.

*Rise of Vajrayāna According to the Oral Tradition* *135-146*

In *Dhīḥ* issue 13 under the title of the rise of *Vajrayāna*, a brief introduction have been given : 1. Intuition tradition 2. Sign tradition & 3. Oral tradition. In the present issue, a general information of the rise of *Vajrayāna* according to the tradition of oral is being given.

*Sanskrit Restoration of Suhṛllekha and Vyaktapadā Commentary* *147-156*

In this article Sanskrit restoration of *suhṛllekha* of ācārya Nāgārjuna and its commentary *Vyaktapadā* by ācārya Mahāmati along with, readings of different versions, importance of the text, distinguishing interpretive and definitive of Buddha's three turning wheel of Dharma, subject of the text, philosophy of ācārya and his spiritual friend Gotamīputra have been briefly explained.

*Authenticity of Mahāyānasūtras as Buddhavacana* *157-164*

Both the *Mahāyāna & Hīnayāna* vehicles are actually teachings of Buddha. Buddha has given teachings on them in his three fold turning wheel of Dharma. Still, the followers of *Sthavira* do not accept *Mahāyānasūtras* as a teaching of Buddha. In this article an attempt has been made to prove with example the above mentioned as *Buddhavacana* through *Mahāyānasūtras* to eliminate this misunderstanding.

*Glossary of Buddhist technical terms : Appendix* *165-192*

In the present issue, for the convenience of the researchers, technical terms published in 19th, 25th and 29th issues have been collected, incorporated in alphabetical form and are being presented. At the same time a separate index of intermediary technical terms occuring in explanation of those words are also being given.

In the above issues materials have been collected from *Laghukālacakratantra Ṭīkā Vimalprabhā* Part (III) of *Kalki Śrīpuṇḍarīka, Yoginīsañcāratantra Nibandha* of Tathāgatarakṣita, commentary of Alakakalaśa and Caryāmelāpakapradīpa of Āryadeva etc.

*Dhīḥ : A Lion's Vision* *193-210*

An alphabetical order of articles and their authors of the source materials published in from *Dhīḥ* 1 to 15 had already been given in the 15th issue. In this issue alphabetical order of articles and authors of entire materials published from issues 16 to 30 are being presented. At the same time an index of entire collected materials of rare texts from *Dhīḥ* 16 to 30 also being given, so that research materials are easily accessible to the researchers.

*Kurukullākalpa* *211-250*

In the present issue of *Dhīḥ, Kurukullākalpa* is being presented. This is edited with the help of six Sanskrit MSS. along with Tibetan translation. There are some differences in the composition of *Kalpa*s of this text in Sanskrit and Tibetan as well as there are minor difference in the readings also. This is an important text of *Āryatāra*'s *Kalpa* category.

•

CENTRAL INSTITUTE OF HIGHER TIBETAN STUDIES
SARNATH, VARANASI

**List of books published under Rare Buddhist Texts Series**

1. Guhyādi-Aṣṭasiddhi Saṁgraha (1988) : Rs. 115 Hb, 90 Pb.
2. Jñānodaya Tantram (1988) : Rs. 15Pb.
3. Durlabha Grantha Paricaya Vol. I (1990) : Rs. 55Hb.
4. Durlabha Grantho kī Ādhāra Sāmagrī, Vol. I (1990) : Rs. 40Hb.
5. Bauddha Tantra Kosha, Vol. I (1990) : Rs. 45Hb, Rs. 40Pb.
6. Lupta Bauddha Vacana Saṁgrah, Vol. I (1990) : Rs. 40Hb, Rs. 30Pb.
7. Vasantatilaka of Kṛṣṇapāda with Auto-commentary. (1990) : Rs. 95Hb, Rs. 70Pb.
8. Ḍākinījālasaṁvararahasyam (1990) : Rs. 15Pb.
9. Krisṇayamāri Tantra with Ratnāvalīpañjikā of Kumaracandra (1992) : Rs. 150Hb, Rs. 100Pb.
10. Mahāmāyā Tantra with Gunavatiṭīkā of Ratnākaraśānti (1992) : Rs. 70Hb, Rs. 50Pb.
11. Abhisamayamañjarī of Śubhākaragupta (1993) : Rs. 35Pb.
12. Vimalaprabhāṭīkā, Vol. IInd, Rs. 110Hb, Rs. 75Pb.
13. Vimalaprabhāṭīkā, Vol. IIIrd, Rs. 110Hb, Rs. 70Pb.
14. Bauddha Tantra Kosha, Vol. II (1997) : Rs. 100Hb, Rs. 85Pb.
15. Sūtratantrodbhava katipaya Dharaṇīmantra (1997) : Rs. 75Hb, Rs. 55Pb.
16. Adhyātmasāraśatakam (1997) : Rs. 40Pb.

17. Durlabha Bauddha Grantha Paricaya, Vol II (1997) : Rs. 150Hb, Rs. 125Pb.
18. Durlabha Grantho kī Ādhāra Sāmagrī, Vol. II (1997) Rs. 180Hb, Rs. 150Pb.
19. Bauddha Laghu Grantha Saṁgraha (1997) : Rs. 110Hb, Rs. 80Pb.
20. Siddhaikavīramahātantram (1998) : Rs. 90Hb, Rs. 60Pb.
21. Yoginīsañcāratantram with Ṭīkā (1998) : Rs. 170Hb, Rs. 140Pb.
22. Caryāmelapakapradīpam of Āryadeva (2000) Rs. 160Hb, Rs. 110Pb.
23. Tattvajñānasaṁsiddhi with Commentary : (2000) Rs. 135 Hb, Rs. 100Pb.
24. Sampādana Ke Siddhānta Aur Upādana : (Collection of Articles) (1990) Rs. 150Hb, Rs. 100Pb.
25. Bhāratīya Tantraśāstra (Proceedings of Workshop) (1995) : Rs. 380Hb, 220Pb.
26 ***Dhīḥ:*** Back issues of the journal are also available.

Complete set (Vol. I to XXIX): Total Rs. 1804.00.

●●●